एते पुंसि स्युः । अयमृषिः ॥ **हस्तकुन्तान्तव्रातवातदूतधूर्तसूतचूतमुहूर्ताः** ।६३। एते पुंसि । अयं हस्त इत्यादि । इति पुंलिङ्गाधिकारः ॥

**नपुंसकम्** । अयमधिकारः ॥ **भावे ल्युडन्तः** ।१। ज्ञानम् । हसनम् । भावे किम् । पचनः ॥ **निष्ठा च** ।२। भावे या निष्ठा तदन्तं क्लीबं स्यात् । गीतम् ॥ **त्वष्यञौ तद्धितौ** ।३। शुक्लत्वम् । शौक्ल्यम् । षित्वसामर्थ्यात्पक्षे स्त्रीत्वे ङीष् । चातुरी ॥ **कर्मणि च ब्राह्मणादिगुणवचनेभ्यः** ।४। ब्राह्मण्यम् ॥ **यद्यढग्यगञण्वुञ्छाश्च भावकर्मणि** ।५। एतानि क्लीबानि । स्तेयम् । सख्यम् । कापेयम् । सैनापत्यम् । औष्ट्रम् । द्वैहायनम् । पितापुत्रकम् । अच्छावाकीयम् ॥ **अव्ययीभावः** ।६। अधिहरि ॥ **द्वन्द्वैकत्वम्** ।७। पाणिपादम् ॥ **अनल्पे छाया** ।८। शरच्छायम् ॥ **इसुसन्तः** ।९। हविः । सर्पिः । धनुः ॥ **अर्चिः स्त्रियां च** ।१०। इदमियं वार्चिः ॥ **छदिः स्त्रियामेव** ।११। इयं छदिः ॥ **मुखनयनलोहवनमांसरुधिरकार्मुकविवरजलहलधनान्नाभिधानानि** ।१२। एषामभिधायकानि क्लीबे स्युः । मुखमाननं वक्त्रम् इत्यादि ॥ **सीरार्थौदनाः पुंसि** ।१३। **वक्त्रनेत्रारण्यगाण्डीवानि पुंसि च** ।१४। चात् क्लीबे ॥ **अटवी स्त्रियाम्** ।१५। पूर्वस्येयं त्रिसूत्री बाधिका ॥ **लोपधः** ।१६। कुशलम् ॥ **शीलादीनि पुंसि च** ।१७। चात् क्लीबे । शीलम् ॥ **शतादिः संख्या** ।१८। शतम् । सहस्रम् ॥ **शतायुतप्रयुताः पुंसि च** ।१९। **लक्षा कोटिः स्त्रियाम्** ।२०। इयं लक्षा ॥ **सहस्रः पुंसि** ।२१। **मन् द्व्यच्कोऽकर्तरि** ।२२। मन्प्रत्ययान्तो द्व्यच्कः पुंसि स्यात् चात् क्लीबे नतु कर्तरि । वर्मा । वर्म । अकर्तरि किम् । ददातीति दामा । **ब्रह्मन्पुंसि च** ।२३। अयं ब्रह्मा । इदं ब्रह्म ॥ **सामरोमणी क्लीबे** ।२४। पूर्वसापवादः ॥ **असन्तो द्व्यच्कः** ।२५। यशः । मनः । तपः । अप्सराः ॥ **स्त्रियाम्** ।२६। एता अप्सरसः । **त्रन्नन्तः** ।२७। पत्रम् । छत्रम् ॥ **यात्रामात्राभस्त्रादंष्ट्रावरत्राः स्त्रियामेव** ।२८। इति नपुंसकाधिकारः ॥

स्त्रीपुंसयोः ।१। अयमधिकारः॥ गोमणियष्टिमुष्टिपाटलिबस्तिशाल्मलित्रुटिमसिमरीचयः ।२। इयमयं वा गौः ॥ अपत्यार्थतद्धिते ।३। औपगवः । औपगवी । इति स्त्रीपुंसाधिकारः ॥

पुंनपुंसकयोः । अधिकारोयम् । घृतभूतमुस्तक्ष्वेलितैरावतपुस्तकबुस्तलोहिताः ।१। अयं घृतः । इदं घृतम् । कबन्धौषधायुधान्ताः ।२। स्पष्टम् । दण्डमण्डखण्डशवसैंधवपार्श्वकाशाङ्कुशकुलिशाः ।३। दण्डः । दण्डम् ॥ इति पुंनपुंसकाधिकारः ॥

अव्ययमवशिष्टलिङ्गम् ।१। कतियुष्मदस्मदः ।२। ष्णान्ता संख्या। शिष्टा परवत् ।३। एकः पुरुषः । एका स्त्री । एकं कुलम् ॥ गुणवचनम् ।४। शुक्लः पटः ॥ शुक्ला पटी । शुक्लं वस्त्रम् ॥ कृत्याश्च ।५। करणाधिकरणयोर्ल्युट् च ।६। सर्वादीनि सर्वनामानि ।७। स्पष्टार्थेयं त्रिसूत्री ।

इति श्रीवरदराजदीक्षितविरचितपाणिनीयलिङ्गानुशासनसारभूता लिङ्गानुशासनसूत्रवृत्तिः समाप्ता ॥



श्रीः ।

# मध्यकौमुदीस्थसूत्राणामकारादिवर्णक्रमः ।

अइउण् १ ऋलृक् २ एओङ् ३ ऐऔच् ४ हयवरट् ५ लण् ६ ञमङणनम् ७ झभञ् ८ घढधष् ९ जबगडदश् १० खफछठथचटतव् ११ कपय् १२ शषसर् १३ हल् १४ । इति माहेश्वराणि सूत्राण्यणादिसंज्ञार्थानि ।

पृष्ठम् सूत्रम्



पृष्ठम् सूत्रम्



पृष्ठम् सूत्रम्

# निर्णयसागरयन्त्रालये विक्रेयानि संस्कृतपुस्तकानि.



| | मू. | मा. व्य. |
|---|---|---|
| **अष्टाध्यायीसूत्रपाठः**—पाणिनिमुनिप्रणीतः... ... ... ... | ≋ | ॥ |
| **धातुरूपावलिः**— ... ... ... ... ... ... ... | ≋ | ॥ |
| **पातञ्जलमहाभाष्यम्**—( नवाह्निकम् । ) कैयटप्रणीतप्रदीपेन नागेशकृतोद्द्योतेन पायगुण्डेकृतछायया च परिवृतम् । श्रीवाराणस्यादिनगरेषु विहितमुद्रणमपीदं नवाह्निकभाष्यमविभक्तविषयतया साहायकमिवाचरति दुर्बोधतायां विषयगाम्भीर्यस्येत्याकर्ण्य विविधविचक्षणमुखात्, संजातसुविभक्तमुद्रणोत्साहेन मयैतत् पूर्वपक्षि–सिद्धान्त्येकदेशि–सिद्धान्तयुक्तिभिस्तदन्तर्गतैरवान्तरविषयैश्च संविभज्य संयोज्य च यथास्वं शिरोलेख्ये–(हेडिंग)न संविभक्तविषयसूचकेन, विभूष्य च कृतसंविभागप्रदीपोद्द्योतयोरधस्तात् संनिवेशनेन मुद्रितम् । येनास्यानतिशिक्षिता अपि रहस्यमवगच्छेयुः । पायगुण्डे इत्युपाभिधनागेशछात्रप्रवरकृतछायायास्तु प्रथमोऽयं मुद्रणशालाप्रवेशः । इयमत्र टिप्पणीरूपं प्रतिलम्भिता.... ... | ५ | ।= |
| **प्राकृतमञ्जरी**—श्रीमत्कात्यायनमुनिप्रणीतप्राकृतसूत्रवृत्तिः । संस्कृतनाटकादिप्रबन्धेषु नव्यादिपात्रेषु प्राकृतभाषा प्रयुक्तोपलभ्यते । सा किल मागधी–शौरसेनी–पैशाचीत्यादिभेदेन षोढा प्रविभक्ता प्राचीनैः प्राकृतभाषाव्याकर्तृभिः प्राकृतकल्पलतिकाकारादिभिः । तेष्वन्यतमस्य प्राथमकल्पिकस्य प्राकृतभाषाभेदस्येयं परिचायिकास्माभिर्भूयसायासेन संपाद्य मुद्रितास्ति ... ... ... ... | ।· | ॥ |
| **रामचन्द्रिका**—संस्कृतशब्दरूपावलिः, गुञ्जीकरकृता. ... ... | ।· | ॥ |
| **लघुसिद्धान्तकौमुदी**—श्रीवरदराजविरचिता, टिप्पण्या सूत्राणामकारादिकोशेन च सहिता. ... ... ... ... ... | ।= | – |
| **लघुधातुरूपसंग्रहः**—अत्र प्राचीनपण्डितवरसुबोधशास्त्रिप्रणीताः सोपसृष्टधात्वर्थादर्शनामिकाः कारिकाः सव्याख्याः लकारार्थनिरूपणं च विद्यते । तथा च धातूनां लक्षणानि, अनुबन्धप्रयोजनानि, उपसर्गार्थनिरूपणं च. ... ... ... ... ... | ≋ | ॥ |

शब्दरूपावलिः—गुञ्जीकरकृता. ... ... ... ... ... ८-॥ ०॥

समासचक्रम् ... ... ... ... ... ... ... ... ८- ०॥

सारस्वतव्याकरणं पूर्वार्धम्—वस्त्रबद्धम्. ... ... ... ।- ८-

सारस्वतव्याकरणं वृत्तित्रयात्मकम्—इदं पुस्तकं प्राचीनहस्त-लिखितपुस्तकान्येकीकृत्य संशोधय्य च मुद्रितम् । केवलं वस्त्रबद्धपुस्तकस्य. ... ... ... ... ... ... ... ।॥। ८=

सारस्वतव्याकरणम्—वृत्तित्रयात्मकम्—पत्रमात्रबद्धम्... ... ।॥= ८-॥

सारस्वतव्याकरणम्—चन्द्रकीर्तिप्रणीतव्याख्यासहितम् ( वृत्तित्रया-त्मकम्. ) ... ... ... ... ... ... ... ... २॥ ।•

सारस्वतव्याकरणम्—चन्द्रकीर्तिव्याख्यासहितम् । पूर्वार्धम्. ... १ ८-

सारस्वतव्याकरणम्—चन्द्रकीर्तिव्याख्यासहितम् । उत्तरार्धम् ... १॥ ।•

सारस्वतपूर्वपक्षावलिः. ... ... ... ... ... ... ८=॥ ०॥

सिद्धान्तकौमुदी—भट्टोजिदीक्षितकृता, अष्टाध्यायी, सूत्रपाठः, गण-पाठः, धातुपाठः, लिङ्गानुशासनं, शिक्षा, सूत्रानुक्रमणी चेत्येतैः सहिता. ... ... ... ... ... ... ... ... २। ।-

सिद्धान्तकौमुदी (तत्त्वबोधिनीसमाख्यव्याख्यासंवलिता.)—इयं चो-त्तरकृदन्तान्तं श्रीमत्परमहंसपरिव्राजकाचार्यज्ञानेन्द्रसरस्वती-भिर्विरचित-तत्त्वबोधिनीसंवलिता, उत्तरत्र, स्वरवैदिकीप्रकरण-योस्तु श्रीमज्जयकृष्णविरचिता सुबोधिनी, लिङ्गानुशासनो-परि भैरवमिश्रविरचितभैरवीटीका च वर्तते । ग्रन्थान्ते च पाणि-नीय-शिक्षा, सूत्रपाठः, गणपाठः, धातुपाठः, लिङ्गानु-शासनं चेति परिशिष्टानि अकाराद्यनुक्रमेण कौमुदीगताष्टा-ध्यायी सूत्राणां पृष्ठाङ्कसूत्राङ्क-सूची, वार्तिक-गणसूत्र-परि-भाषाणां समुचितसूची, धातूनां पृष्ठाङ्कसूची, उणादिसूत्र-सूची फिट्सूत्रसूचीति कोशपञ्चकं च संगृहीतम्. ... ... ४। ।॥।•

इमान्यन्यानि च पुस्तकान्यस्मत्समीपे म. व्ही. पी. द्वारा वा मिलिष्यन्ति.

पांडुरंग जावजी,
निर्णयसागरमुद्रणालयाध्यक्षः,
मुंबई.

